तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् । विवाहो ह्यष्टवर्षाया: कन्यायास्तु प्रश-स्यते ॥ ६७ ॥ * तैलामलकदाता च स्नानाभ्यङ्गप्रदायकः । नरः प्रहृष्टमासीत सुभगश्चोपजायते ॥ ६८ ॥ अनड्वाहौ तु यो दद्याद्द्विजे सीरेण संयुतौ । अलं-कृत्य यथाशक्त्या(क्ति) धूर्वहौ शुभलक्षणौ ॥ ६९ ॥ सर्वपापविशुद्धात्मा सर्वकाम-समन्वितः । वर्षाणि वसते[2] स्वर्गे रोमसंख्याप्रमाणतः ॥ ७० ॥ धेनुं च यो द्विजे[3] दद्यादलंकृत्य पयस्विनीम् । कांस्यवस्त्रादिभिर्युक्तां स्वर्गलोके महीयते ॥ ७१ ॥ भूमिं सस्यवतीं श्रेष्ठां ब्राह्मणे वेदपारगे[4] । गां दत्त्वाऽर्धप्रसूतां च स्वर्गलोके महीयते ॥ ७२ ॥ यावन्ति सस्यमूलानि गोरोमाणि च सर्वशः । नरस्तावन्ति वर्षाणि स्वर्ग-लोके महीयते ॥ ७३ ॥ यो ददाति शफै रौप्यैर्हेमशृङ्गीमरोगिणीम् । सवत्सां वाससा वीतां सुशीलां गां पयस्विनीम् ॥ ७४ ॥ तस्यां यावन्ति रोमाणि सवत्सा-यां दिवं गतः । तावन्ति[5] वत्सरान्तानि स नरो ब्रह्मणोऽन्तिके ॥ ७५ ॥ यो ददाति बलीवर्दमुक्तेन विधिना शुभम् । अभ्यङ्गं[6] गोप्रदानेन[7] दत्तं दशगुणं फलम् + ॥ ७६ ॥ अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः । लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च महीं च दद्यात् ॥ ७७ ॥ सर्वेषामेव दानानामे-कजन्मानुगं फलम् । हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥ ७८ ॥ अन्नदस्तु भवेन्नित्यं सुतृप्तो निभृतः सदा । अम्बुदस्तु सुखी नित्यं सर्वकर्म-( काम )समन्वितः ॥ ७९ ॥ सर्वेषामेव दानानामन्नदानं परं स्मृतम् । सर्वेषामेव जन्तूनां यतस्तज्जीवितं परम् ॥ ८० ॥ यस्मादन्नात्प्रजाः सर्वाः कल्पे कल्पेऽसृज-त्प्रभुः । तस्मादन्नात्परं दानं[8] विद्यते न हि किंचन ॥ ८१ ॥ अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ॥ ८१ ॥ मृत्तिकां गोशकृद्दर्भानुपवीतं तथोत्तरम् । दत्त्वा गुणाढ्यविप्राय कुले महति जायते[10] ॥ ८२ ॥ मुखवासं तु यो दद्याद्दन्तधावनमेव च ।

---

* एतद्वचनस्थानेऽयं पाठो ग. घ. पुस्तकयोः—"तैलमस्तरणं प्राज्ञः पादाभ्यङ्गं ददाति यः । प्रहृष्ट-मानसो लोके सुखी चैव सदा वसेत्" इति । + इतः परमेतद्वचनमधिकं ग. पुस्तके—"जलदस्तृप्तिमतुलां वितृष्य सर्ववस्तुषु । अन्नदः सुखमाप्नोति सुतृप्तः सर्ववस्तुषु" इति ।

---

१ ग. °ह्यात्कौलसी° । २ ग. घ. वसति । ३ क. ङ. द्विजो । ४ ग. °नि आरोप्याणि । ५ ग. °वद्वर्ष-सहस्राणि स । ६ ख. ग. ङ. °भ्यङ्गगो° । ७ ग. °न फलादृश° । ८ ग. घ. च. °नं न भूतं न भविष्यति । अन्नदानात्परं दानं वि° । ९ ग. °णाभ्यवि° । १० क. °ते । मुखं वा° । ङ. °ते । मुखवा° ।

शुचिगन्धसमायुक्तो[1] वाक्पटुः स सदा भवेत् ॥ ८३ ॥ पादशौचं तु यो दद्या-त्तथा च गुदलिङ्गयोः । यः प्रयच्छति विप्राय शुद्धबुद्धिः सदा भवेत् ॥ ८४ ॥ औषधं पथ्यमाहारं स्नेहाभ्यङ्गं प्रति[2]श्रयम् । यः प्रयच्छति रोगिभ्यः स[3] भवेद्व्या-धिवर्जितः ॥ ८५ ॥ गुडमिक्षुरसं चैव लवणं व्यञ्जनानि च । सुरभीणि च पानानि दत्त्वाऽ[4]त्यन्तसुखी भवेत् ॥ ८६ ॥ दानैश्च विविधैः सम्यक्फलमेतदुदाहृ-तम् । विद्यादानेन[5] सुमतिर्ब्रह्मलोके महीयते ॥ ८७ ॥ अन्योन्यान्न[6]प्रदा विप्रा अन्योन्यप्रतिपूजिकाः । अन्योन्यं प्रतिगृह्णन्ति तारयन्ति तरन्ति च ॥ ८८ ॥ दाना-न्येतानि देयानि तथाऽन्यानि विशेषतः । दीनान्धकृपणा[7]र्थिभ्यः श्रेयस्कामेन धीमता ॥ ८९ ॥ ब्रह्मचारि[8]यतिभ्यश्च वपनं यस्तु कारयेत् । नखकर्मादिकं चैव चक्षुष्मा-ञ्जायते नरः ॥ ९० ॥ देवागारे द्विजातीनां दीपं दद्याच्चतुष्पथे । मेधावी ज्ञानसं-पन्नश्चक्षुष्मान्स सदा भवेत् ॥ ९१ ॥ नित्ये नैमित्तिके काम्ये तिलान्दत्त्वा स्वशक्तितः । प्रजावान्पशुमांश्चैव धनवाञ्जायते नरः ॥ ९२ ॥ यो यदाऽभ्यर्थितो विप्रैर्यद्यत्संप्रति-पादयेत्[9] । तृणकाष्ठादिकं चैव गोप्रदानसमं भवेत् ॥ ९३ ॥ * न[10] विस्मयीत तपसा न यज्ञेनानृतं वदेत् । अपवदेन्न विप्रस्य न दीनं परिकीर्तयेत् ॥ ९४ ॥ यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् । आयुर्विप्रापवादेन दानं च परिकीर्तनात् ॥ ९५ ॥ चत्वार्येतानि कर्माणि संध्यायां वर्जयेद्बुधः । आहारं मैथुनं निद्रां तथा संपाठमेव च ॥ ९६ ॥ आहाराज्जायते व्याधिर्गर्भो वै रौद्र( द्रो ) मैथुनात् । निद्रातो जायतेऽ-लक्ष्मीः संपाठादायुषः क्षयः ॥ ९७ ॥ ऋतुमतीं तु यो भार्यां संनिधौ नोपगच्छति । तस्या रजसि तन्मासं पितरस्तस्य शेरते ॥ ९८ ॥ कृत्वा[11] गृह्याणि कर्माणि स्वभा-र्यापोषणे[12] रतः । ऋतुकालाभिगामी च प्राप्नोति परमां गतिम् ॥ ९९ ॥ उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात्परम् । वलीपलितसंयुक्तस्तृतीयं तु समाश्रयेत् ॥ १०० ॥ वनं गच्छेत्ततः प्राज्ञः सभार्यस्त्वेक एव वा । गृहीत्वा चाग्निहोत्रं च होमं तत्र न हापयेत् ॥ १०१ ॥ कुर्याच्चैव पुरोडाशं वन्यैर्मेध्यैर्यथाविधि । भिक्षां च भिक्षवे दद्याच्छाकमूलफला[13]दिभिः ॥ १०२ ॥

---

* इतःप्रभृति शेरत इत्यन्तग्रन्थो ग. घ. च. पुस्तकेषु न विद्यते ।

---

१ क. ख. °क्तो अवाग्दुष्टः सदा । २ क. ङ. °तिश्रिय° । ३ ग. सर्वव्याधिवित्र° । ४ क. ङ. °त्यन्तं सु° । ५ ग. घ. च. °न पुण्येन ब्रह्म° । ६ ग. °न्नप्रदा वि° । ७ ग. °णादिभ्यः । ८ क. ग. घ. °चारी य° । ९ क. च. °ति दापये° । १० ख. न वै शयीत तमसा । ११ घ. °त्वाऽग्निहोत्रकर्मा° । १२ घ. °षणं परम् । ऋ° । १३ ग. च. °लानि च । कु° ।

कुर्यादध्ययनं नित्यमग्निहोत्रपरायणः । इष्टिं[1] च पार्वणीयां तु प्रकुर्यात्प्रतिपर्वसु ॥ १०३ ॥ उषित्वैवं वने विप्रो विधिज्ञः सर्वकर्मसु[2] । चतुर्थमाश्रमं गच्छेज्जितक्रोधो[3] जितेन्द्रियः ॥ १०४ ॥ अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् । वेदाभ्यासरतो नित्यमात्मविद्यापरायणः ॥ १०५ ॥ अष्टौ भिक्षाः समादाय स मुनिः सप्त पञ्च वा । अद्भिः प्रक्षाल्य[4] ताः सर्वा भुञ्जीत सुसमाहितः ॥ १०६ ॥ अरण्ये निर्जने तत्र पुनरासीत भुक्तवान् । एकाकी चिन्तयेन्नित्यं मनोवाक्कायकर्मभिः ॥ १०७ ॥ मृत्युं च नाभिनन्देत जीवितं वा कथंचन । कालमेव प्रतीक्षेत यावदायुः समाप्यते ॥ संसेव्य चाऽऽश्रमान्सर्वाञ्जितक्रोधो जितेन्द्रियः ॥ १०८ ॥ ब्रह्मलोकमवाप्नोति वेदशास्त्रार्थविद्द्विजः । आश्रमेषु च सर्वेषु[6] प्रोक्तोऽयं प्राश्निको विधिः ॥ १०९ ॥ * अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम् । ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ॥ ११० ॥ महापातकिनस्त्वेते तत्संयोगी च पञ्चमः । ब्रह्मघ्नस्तु वनं गच्छे[7]द्वालवासा जटी ध्वजी ॥ १११ ॥ वन्यान्येव फलान्यश्नन्सर्वकामाविवर्जितः । भिक्षार्थी विचरेद्ग्रामं वन्यैर्यदि न जीवति ॥ ११२ ॥ चातुर्वर्ण्यं चरेद्भैक्षं[8] खट्वाङ्गी संयतः सदा । भिक्षास्त्वेवं समादाय वनं गच्छेत्ततः पुनः ॥ ११३ ॥ वनवासी स पापः स्यात्सदाकालमतन्द्रितः । ख्यापयेन्मुच्यते[10] पापाद्ब्रह्महा पापकृत्तमः ॥ ११४ ॥ अनेन तु विधानेन द्वादशाब्दव्रतं चरेत् । संनियम्येन्द्रियग्रामं सर्वभूतहिते रतः ॥ ११५ ॥ ब्रह्महत्यापनोदाय ततो मुच्येत किल्बिषात् । अतः परं सुरापस्यै[11] निष्कृतिं श्रोतुमर्हथ ॥ ११६ ॥ गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पातव्या द्विजो[12]त्तमैः ॥ ११७ ॥ सुरापस्तु सुरां तप्तां पिबेत्तत्पापमोक्षकः[13] । गोमूत्रमग्निवर्णं वा गोमयं वा तथाविधम् + ॥ ११८ ॥ घृतं वा त्रीणि पेयानि सुरापो व्रतमाचरेत् । मुच्यते तेन पापेन प्रायश्चित्ते कृते सति ११९ ॥

---

* एतदर्धस्थानेऽयं पाठो ग. पुस्तके–" अथाभिवक्ष्ये पापानां प्रायश्चित्तं यथाविधि " इति । + इतः परमेतदधिकं ग. पुस्तके–" षण्मासादधिकं वाऽपि पूर्वोक्तव्रतमाचरेत् । महापातकिसंयोगे ब्रह्महत्यादिभिर्नरः " इति ।

---

१ क. ख. ङ. च. °ष्टिं पार्वायणी° । २ ग. च. °र्ववस्तुषु । च° । ३ ग. घ. °च्छेद्धुतहोमो जि° । ४ ग. घ. च. °स्य तत्सर्वं भु° । ५ ग. °यसंयुतः । मृ° । ६ ग. °षु ह्युक्तः प्रासङ्गिको । घ. च. °षु ह्युक्तः प्राणान्तिको । ७ ख. ग. °च्छेद्वल्कवा° । ८ क. ख. °द्भैक्ष्यं ख° । ९ ग. घ. °तः पुमान् । भैक्षं चैव स° । १० ग. घ. च. °पयन्नेव तत्पापं ब्रह्मघ्नः(हा) पापकृन्नरः । अ° । ११ ग. °स्य प्रवक्ष्यामि विनिष्कृतिम् । श्रोतुमिच्छत भो विप्रा वेदशास्त्रानुरूपिकाम् । गौ° । १२ ग. घ. द्विजैः सदा । सुराप° । १३ क. गः क्षकम् । गो° ।

अरण्ये वा वसेत्सम्यक्सर्वकामविवर्जितः । चान्द्रायणानि वा त्रीणि सुरापव्रतमादिशेत् ॥ १२० ॥ एवं शुद्धिः सुरापस्य भवेदिति न संशयः । मद्यभाण्डोदकं पीत्वा पुनः संस्कारमर्हति ॥ १२१ ॥ स्तेयं कृत्वा सुवर्णस्य स्तेयं राज्ञे निवेदयेत् । ततो मुसलमादाय स्तेनं हन्यात्सकृन्नृपः ॥ १२२ ॥ यदि जीवति स स्तेनस्ततः स्तेयाद्विमुच्यते । अरण्ये चीरवासा वा चरेद्ब्रह्महणो व्रतम् ॥ एवं शुद्धिः कृता स्तेये संवर्तवचनं यथा ॥ १२३ ॥ गुरुतल्पे शयानस्तु तप्ते स्वप्यादयोमये । समालिङ्गेत्स्त्रियं वाऽपि दीप्तां कार्ष्णायसीकृताम् ॥ १२४ ॥ चान्द्रायणानि वा कुर्याच्चत्वारि त्रीणि वा द्विजः । मुच्यते च ततः पापात्प्रायश्चित्ते कृते सति ॥ १२५ ॥ एभिः संपर्कमायाति यः कश्चित्पापमोहितः । * तत्तत्पापविशुद्ध्यर्थं तस्य तस्य व्रतं चरेत् ॥ १२६ ॥ क्षत्रियस्य वधं कृत्वा त्रिभिः कृच्छ्रैर्विशुध्यति । कुर्याच्चैवानुरूपेण त्रीणि कृच्छ्राणि संयतः ॥ १२७ ॥ वैश्यहत्यां तु संप्राप्तः कथंचित्काममोहितः । कृच्छ्रातिकृच्छ्रौ कुर्वीत स नरो वैश्यघातकः ॥ १२८ ॥ कुर्याच्छूद्रवधे विप्रस्तप्तकृच्छ्रं यथाविधि । एवं शुद्धिमवाप्नोति संवर्तवचनं यथा ॥ १२९ ॥ गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिं तत्त्वतः शुभाम् । गोघ्नः कुर्वीत संस्थानं गोष्ठे गोरूपसंनिधौ ॥ १३० ॥ तत्रैव क्षितिशायी स्यान्मासार्धं संयतेन्द्रियः । स्नानं त्रिषवणं कुर्यान्नखलोमविवर्जितः ॥ १३१ ॥ सक्तुयावकभिक्षाशी पयोदधिशकृन्नरः । एतानि क्रमशोऽश्नीयाद्द्विजस्तत्पापमोक्षकः + ॥ १३२ ॥ गायत्रीं च जपेन्नित्यं पवित्राणि च शक्तितः । × पूर्णे चैवार्धमासे च स विप्रान्भोजयेद्द्विजः ॥ १३३ ॥ भुक्तवत्सु च विप्रेषु गां च दद्याद्विचक्षणः । व्यापन्नानां बहूनां तु रोधने बन्धनेऽपि वा ॥ १३४ ॥ भिषङ्मिथ्यापचारे च द्विगुणं गोव्रतं चरेत् ॥ १३५ ॥

---

* इत उत्तरं सार्धं वचनमधिकं ग. च. पुस्तकयोः—" घृतं चैव सुतप्तं च क्षीरं वाऽपि तथाविधम् ! संवत्सरं कणानश्नन्सर्वकामविवर्जितः । चान्द्रायणानि वा त्रीणि सुरापी व्रतमाचरेत् " इति । + इतः परमेतदधिकं ग. पुस्तके—" शुध्यते सार्धमासेन नखलोमविवर्जितः । स्नानं त्रिषवणं चास्य गवामनुगमस्तथा । एतत्समाहितः कुर्यान्नरो विगतमत्सरः " इति । × अत्र भङ्ग्यन्तरेण पाठो ग. पुस्तके—" ततश्चीर्णव्रतः कुर्याद्विप्राणां भोजनं परम् " इति ।

---

१ घ. °माचरेत् । २ ग. °स्य राज्ञे शंसेत मानवः । त° । घ. च. °स्य राज्ञे शंसेत्स मानवः । त° । ३ क. एवं सं° । ४ ग. तत्पापस्य वि° । ५ क. शुचिः । ६ क. ख. ङ. संस्कारं । ७ ग. °संस्थिते । त° । ८ ग. °कपिण्याकप° । ९ ग. घ. सावित्रीं । १० ग. व्यापादितेषु बहुषु बन्धने रोधनेऽपि । ११ क. °न्ना च हतानां । १२ ग. घ. वां । द्विगुणं गोव्रतं तस्य प्रायश्चित्तं विशुद्धये । ए° ।

एका चेद्बहुभिः काचिद्दैवाद्व्यापादिता क्वचित् । पादं पादं तु हत्यायाश्चरेयुस्ते पृथक्पृथक् ॥ १३६ ॥ यन्त्रणे[1] गोचिकित्सार्थे गूढगर्भविमोचने[2] । यदि तत्र विपत्तिः स्यान्न स पापेन लिप्यते ॥ १३७ ॥ * औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च । दीयमाने विपत्तिः स्यात्पुण्यमेव न पातकम् ॥ १३८ ॥ प्रायश्चित्तस्य पादं तु रोधेषु व्रतमाचरेत् । द्वौ पादौ बन्धने चैव पादोनं यन्त्रणे[3] तथा ॥ १३९ ॥ पाषाणैर्लकु[4]टैर्दण्डैस्तथा शस्त्रादिभिर्नरः । निपातने चरेत्सर्वं प्रायश्चित्तं विशुद्धये[5] ॥ १४० ॥ हस्तिनं तुरगं हत्वा महिषोष्ट्रकपींस्तथा । एषां वधे द्विजः कुर्यात्सप्तरात्रमभोजनम् ॥ १४१ ॥ व्याघ्रं श्वानं[6] खरं[7] सिंहमृक्षं सूकरमेव च । एतान्हत्वा द्विजो[8] मोहात्त्रिरात्रेणैव शुध्यति ॥ १४२ ॥ सर्वासामेव जातीनां मृगाणां वनचारिणाम्[9] । अहोरात्रोषितस्तिष्ठेज्जपन्वै जातवेदसम् ॥ १४३ ॥ हंसं काकं बलाकां[10] च बर्हिकारण्डवावपि । सारसं चाषभासौ च हत्वा त्रिदिवसं क्षिपेत् ॥ १४४ ॥ चक्रवाकं तथा क्रौञ्चं सारिकाशुकतित्तिरीन् । श्येनगृध्रावुलूकं च[11] पारावतमथापि वा ॥ १४५ ॥ टिट्टिभं जालपादं च कोकिलं कुक्कुटं तथा । एषां[12] वधे नरः कुर्यादेकरात्रमभोजनम् ॥ १४६ ॥ पूर्वोक्तानां च सर्वेषां हंसादीनामशेषतः । अहोरात्रोषितस्तिष्ठेज्जपन्वै जातवेदसम् ॥ १४७ ॥ मण्डूकं चैव हत्वा च सर्पमार्जारमूषकम् । त्रिरात्रोपोषितस्तिष्ठेत्कुर्याद्ब्राह्मणभोजनम् ॥ १४८ ॥ अनस्थीन्ब्राह्मणो हत्वा प्राणायामेन शुध्यति । अस्थिमतां वधे विप्रः किंचिद्दद्याद्विचक्षणः ॥ १४९ ॥ यश्चाण्डालीं द्विजो गच्छेत्कथंचित्काममोहितः । त्रिभिः कृच्छ्रैस्तु शुध्येत प्राजापत्यानुपूर्वकैः[13] ॥ १५० ॥ पुंश्चलीगमनं कृत्वा कामतोऽकामतोऽपि वा । कृच्छ्र[14]चान्द्रायणे तस्य पावने[15] परमे स्मृते ॥ १५१ ॥ शैलूषीं रजकीं चैव वेणुचर्मोपजीविनीम्[16] । एता गत्वा द्विजो मोहाच्चरेच्चान्द्रायणं व्रतम् ॥ १५२ ॥

---

* एतद्वचनस्थानेऽयं पाठो घ. च. छ. पुस्तकेषु—"निशि बन्धनरुद्धेषु सर्पव्याघ्रहतेषु च । अग्निविद्युन्निपातेषु प्रायश्चित्तं न विद्यते" इति ।

---

१ छ. यन्त्रितायाश्चिकि° । २ घ. ङ. °मोक्षणे । य° । ३ क. ङ. योक्त्रणे । ग. कुट्टने । घ. योक्षणे । ४ ग. °लैगुडैर्द° । ५ ख दिनत्रयम् । ६ घ. °नं तथा सिंहं वृकं सू° । ७ ग. तथा । ८ ग. घ. च. द्विजः कृच्छ्रं ब्राह्मणानां च भोजनम् । स° । ९ ग. घ. च. °म् । त्रिरात्रोपोषि° । १० घ. बकं । ११ ग. च. कपोतकम° । १२ ग. घ. एवं पक्षिषु सर्वेषु दिनमेकम° । १३ ग. घ. °कैः । पुक्कसीग° । १४ क. ङ. कृत्वा चा° । ग घ. कृच्छ्रं चान्द्रायणं त° । १५ ग. घ. °वनं परमं स्मृतम् । नटीं शैलूषिकीं चैव रजकीं वेणुजीं° । १६ ग. घ. °म् । गत्वा चान्द्रायणं कुर्यात्तथा चर्मोपजीविनीम् ।

क्षत्रियामथ वैश्यां वा गच्छेद्यः काममोहितः। तस्य सांतपनः कृच्छ्रो भवेत्पापापनोदनः ॥१५३॥ शूद्रां[1] तु ब्राह्मणो गत्वा मासं मासार्धमेव वा। गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ १५४ ॥ विप्रस्तु[2] ब्राह्मणीं गत्वा प्राजापत्येन[3] शुध्यति । स्वजनां तु द्विजो गत्वा प्राजापत्यं समाचरेत् ॥ १५५ ॥ क्षत्रियां क्षत्रियो गत्वा तदेव[4] व्रतमाचरेत् । नरो गोगमनं कृत्वा कुर्याच्चान्द्रायणव्रतम् ॥ १५६ ॥ मातुलानीं तथा श्वश्रूं सुतां वै मातुलस्य च । एता गत्वा स्त्रियो मोहात्पराकेण विशुध्यति ॥ १५७ ॥ गुरोर्दुहितरं[5] गत्वा स्वसारं पितुरेव च । तस्या दुहितरं चैव चरेच्चान्द्रायणं व्रतम् ॥ १५८ ॥ पितृव्यदारगमने भ्रातृभार्यागमे तथा । गुरुतल्पव्रतं कुर्यान्निष्कृतिर्नान्यथा भवेत् ॥ १५९ ॥ पितृभार्यां समारुह्य मातृवर्जं नराधमः । भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम् ॥ १६० ॥ एतास्तिस्रः स्त्रियो गत्वा[6] तप्तकृच्छ्रं समाचरेत् । कुमारीगमने चैव व्रतमेतत्समा[7]दिशेत् ॥ १६१ ॥ पशुवेश्याभिगमने प्राजाप[8]त्यो विधीयते[9] । सखिभार्यां समारुह्य श्वश्रूं वा शालिकां तथा ॥ १६२ ॥ मातरं योऽभिगच्छेच्च स्वसारं पुरुषाधमः । न तस्य निष्कृतिं दद्यात्स्वां चैव तनुजां तथा ॥१६३॥ नियमस्थां व्रतस्थां वा योऽभिगच्छेत्स्त्रियं द्विजः । स कुर्यात्प्राकृतं कृच्छ्रं धेनुं दद्यात्पयस्विनीम् ॥१६४॥ रजस्वलां तु यो गच्छेद्गर्भिणीं पतितां तथा । तस्य पापविशुद्ध्यर्थमतिकृच्छ्रो विधीयते[10] ॥ १६५ ॥ वेश्यां तु ब्राह्मणो गत्वा कृच्छ्रमेकं समाचरेत् एवं शुद्धिः समाख्याता संवर्तस्य वचो यथा ॥ १६६ ॥ कथंचिद्ब्राह्मणीं गत्वा क्षत्रियो वैश्य एव च । गोमूत्रयावकाहारो मासेनैकेन शुध्यति ॥१६७॥ शूद्रस्तु ब्राह्मणीं गच्छेत्कदाचित्काममोहितः । गोमूत्रयावकाहारो मासनेकैने शुध्यति ॥१६८॥ ब्राह्मणी(ण्याः) शूद्रसंपर्के कदाचित्समुपागते । कृच्छ्र[11]चान्द्रायणं तस्याः पावनं परमं स्मृतम् ॥ १६९ ॥ चाण्डालं पुल्कसं[12] चैव श्वपाकं पतितं तथा । एताः श्रेष्ठाः स्त्रियो गत्वा कुर्युश्चान्द्रायणत्रयम् ॥ १७० ॥

१ क. ग. घ. शूद्रीं । २ क. ख. ङ. विप्रामस्वजनां ग° । ३ ग. °पत्यं विधीयते । °स्व° । ४ ग. घ. °नीं सनाभिं च मातुलस्याऽऽत्मजां स्नुषाम् । ए° । ५ च. °रं मातु° । ६ च. °त्वाऽप्यज्ञानाच्च सकृद्द्विजः । स चरेत्तप्तकृच्छ्रं तु ज्ञानाच्चान्द्रायणं व्रतम् । कु° । ७ ख. च. °माचरेत् । ८ ग. घ. च. °पत्यं वि° । ९ च. ते । शिष्यभा° । १० ख. °ते । वैश्यजां ब्रा° । ११ ग. ङ. कृच्छ्रं चा° । १२ ग. पुक्कसं ।

अतः परं प्रदुष्टानां निष्कृतिं श्रोतुमर्हथ । संन्यस्य दुर्मतिः कश्चिदपत्यार्थं स्त्रियं व्रजेत्[1] ॥ १७१ ॥ कुर्यात्कृच्छ्रं समानं तत्षण्मासांस्तदनन्तरम् । विषाग्निश्यामशबलास्तेषामेवं विनिर्दिशेत् ॥ १७२ ॥ स्त्रीणां तथा च चरणे[2] गर्भाभिगमनेषु च । पतनेष्वप्ययं दृष्टः प्रायश्चित्तविधिः शुभः ॥ १७३ ॥ नृणां विप्रतिपत्तौ तु पावनः प्रेत्य[3] चेह च । गोविप्रप्रहते चैव तथा चैवाऽऽत्मघातिनि[4] ॥ १७४ ॥ नैवाश्रुपातनं कार्यं सद्भिः श्रेयोभिकाङ्क्षिभिः ॥ १७५ ॥ एषामन्यतमं प्रेतं यो वहेत दहेत वा[5] । कृत्वा चोदकदानं तु चरेच्चान्द्रायणव्रतम् ॥ १७६ ॥ तच्छवं केवलं स्पृष्ट्वा[6] त्वश्रु नो[7] पतितं यदि । पूर्वकेष्वप्यकारी[8] चेदेकाहं क्षपणं तथा ॥ १७७ ॥ महापातकिनां चैव तथा चैवाऽऽत्मघातिनाम् । उदकं पिण्डदानं च श्राद्धं चैव हि यत्कृतम् । नोपतिष्ठति तत्सर्वं राक्षसैर्विप्रलुप्यते ॥ १७८ ॥ चाण्डालैस्तु हता ये तु जलदंष्ट्रिसरीसृपैः । श्राद्धं तेषां न कर्तव्यं ब्रह्मदण्डहताश्च ये ॥ १७९ ॥ कृत्वा मूत्रपुरीषे तु भुक्तोच्छिष्टस्तथा द्विजः । श्वादिस्पृष्टो जपेद्देव्याः सहस्रं स्नानपूर्वकम् ॥ १८० ॥ चण्डालं पतितं स्पृष्ट्वा शवमन्त्यजमेव च । उदक्यां सूतिकां नारीं सवासाः स्नानमाचरेत् ॥ १८१ ॥ [10]स्पृष्टेन संस्पृशेद्यस्तु स्नानं [11]तस्य विधीयते । ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा ॥ १८२ ॥ चण्डालाद्यैस्तु संस्पृष्ट उच्छिष्टश्चेद्द्विजोत्तमः । गोमूत्रयावकाहारः षड्रात्रेण विशुध्यति ॥ १८३ ॥ शुना पुष्पवती स्पृष्टा पुष्पवत्याऽन्यया तथा । शेषाण्यहान्युपवसे[12]त्स्नात्वा शुध्येद्घृताशनात् ॥ १८४ ॥ चाण्डालभाण्डसंस्पृष्टं पिबेत्कूपगतं जलम् । गोमूत्रयावकाहारस्त्रिरात्रेण विशुध्यति ॥ १८५ ॥ अन्त्यजैः स्वीकृते तीर्थे तडागेषु नदीषु च । शुध्यते पञ्चगव्येन पीत्वा तोयमकामतः ॥ १८६ ॥ सुराघटप्रपातोयं पी[13]त्वा [14]नौसाजलं तथा । अहोरात्रोषितो भूत्वा पञ्चगव्यं पिबेद्द्विजः ॥ १८७ ॥ कूपे विण्मूत्रसं[15]स्पृष्टाः प्राश्य चापो द्विजातयः । त्रिरात्रेणैव शुध्यन्ति कुम्भे सांत[16]पनः स्मृतः ॥ १८८ ॥ वापीकूपतडागा[17]नां दूषितानां विशोधनम् । अपां घटशतोद्धारः पञ्चगव्यं च निक्षिपेत् * ॥ १८९ ॥ स्त्रीक्षीरमाविकं पीत्वा संधिन्याश्चैव गोः पयः ।

---

* इतः परमधिकं घ. च. पुस्तकयोः– "भवत्सैकशफोष्ट्रीणां क्षीरं प्राश्य द्विजोत्तमः । अदशनाया गोश्चैव त्रिरात्रं यावकं पिबेत्" इति ।

---

१ ग. °त् । स कुर्यात्कृच्छ्रमश्रान्तः षण्मा° । घ. °त् । स कुर्यात्कृच्छ्रमासानां षण्मा° । २ क. ख. घ. °णे ह्यधिमासगमे तथा । प° । छ. °णे ह्यधमादिग° । ३ ग. प्रेतराडिह । गोभिर्विप्रह° । ४ क. ङ. °तिनः । नै° । ५ च. वा । अथोदकक्रियां कृत्वा च° । ६ ग. °ष्ट्वा वस्त्रं वा केवलं य° । ७ ख. ङ. नो पाति° । ८ ग. पूर्वैः कृच्छ्रापहारी स्यादेकाहक्ष° । ९ क. ङ. °कारा चे° । १० ग. अस्पृश्यं । ११ ग. तेन । १२ ग. °त्स्नाता शु° । १३ °त्वाऽऽकाशज° । १४ घ. च. नाशज° । १५ ग. घ. °स्पृष्टे प्रा° । १६ ग. छ. °पनं स्मृतम् । वा° । १७ क. ख. ङ. °गानामुपहतानां ।

तस्य शुद्धिस्त्रिरात्रेण द्विजानां[1] चैव भक्षणे ॥ १९० ॥ विण्मूत्रभक्षणे चैव प्राजापत्यं समाचरेत् । श्वकाकोच्छिष्टगोच्छिष्टभक्षणे तु त्र्यहं द्विजः ॥ १९१ ॥ बिडालमूषकोच्छिष्टे पञ्चगव्यं पिबेद्द्विजः । शूद्रोच्छिष्टं तथा भुक्त्वा त्रिरात्रेणैव शुध्यति ॥१९२॥ पलाण्डुलशुनं जग्ध्वा तथैव ग्रामकुक्कुटम् । छत्राकं विड्वराहं च चरेत्सांतपनं[2] द्विजः ॥ १९३ ॥ श्वबिडालखरोष्ट्राणां कपेर्गोमायुकाकयोः[3] । प्राश्यं मूत्रं[4] पुरीषं वा चरेच्चान्द्रायणव्रतम् ॥ १९४ ॥ अन्नं पर्युषितं भुक्त्वा केशकीटैरुपद्रुतम्[5] । पतितैः प्रेक्षितं[6] वाऽपि पञ्चगव्यं द्विजः पिबेत् ॥ १९५ ॥ अन्त्यजाभाजने भुक्त्वा ह्युदक्याभाजने तथा । गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ १९६ ॥ गोमांसं मानुषं चैव शुनो(सूनि)हस्तात्समाहृतम् । अभक्ष्यं तद्भवेत्सर्वं भुक्त्वा चान्द्रायणं चरेत् ॥१९७॥ चाण्डालसंकरे[7] विप्रः[8] श्वपाके पुल्कसेऽपि वा । गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ १९८ ॥ पतितेन तु संपर्के[9] मासं मासार्धमेव च । गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ १९९ ॥ *पतितादूद्रव्यमादत्ते भुङ्क्ते वा ब्राह्मणो यदि । कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं चरेद्द्विजः ॥ २०० ॥ यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः । तत्र[10] तत्र तिलैर्होमो गायत्र्या[11] प्रत्यहं द्विजः ॥ २०१ ॥ एष एवं मया प्रोक्तः प्रायश्चित्तविधिः शुभः । अनादिष्टेषु पापेषु प्रायश्चित्तं[12] तथोच्यते ॥ २०२ ॥ दानैर्होमैर्जपैर्नित्यं प्राणायामैर्द्विजोत्तमः । = पातकेभ्यः प्रमुच्येत वेदाभ्यासान्न संशयः ॥ २०३ ॥ सुवर्णदानं गोदानं भूमिदानं तथैव च । नाशयत्याशु पापानि ह्यन्यजन्मकृतान्यपि ॥ २०४ ॥ तिलधेनुं च यो दद्यात्संयताय द्विजन्मने । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥ २०५ ॥ माघमासे तु संप्राप्ते पौर्णमास्यामुपोषितः । ब्राह्मणेभ्यस्तिलान्दत्त्वा सर्वपापैः प्रमुच्यते ॥ २०६ ॥ उपवासी नरो भूत्वा पौर्णमास्यां तु कार्तिके । हिरण्यं वस्त्रमन्नं वा दत्त्वा[13] तरति दुष्कृतिम्[14] ॥ २०७ ॥ अयने विषुवे चैव व्यतीपाते दिनक्षये । चन्द्रसूर्यग्रहे चैव दत्तं भवति चाक्षयम् ॥ २०८ ॥ अमावास्यां(स्या) च द्वादश्यां(शी) संक्रान्तौ(न्ती) च विशेषतः । एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥ २०९ ॥

---

* एतद्वचनं न ग. पुस्तके । = एतदर्धस्थानेऽयं पाठो घ. पुस्तके–"नाशयत्याशु पापानि अन्यजन्मकृतान्यपि" ॥ इति ।

---

१ ग. °ण विड्भक्ष्याणां च भ° । घ. ण विटजानां च भ° । च. °ण चिद्रानां चैव भक्षणात् । वि° । २ ग. °रेच्चान्द्रायणं द्वि° । ३ ग. °युकर्कयोः । ४ क. ङ. °श्यमात्रं । ५ घ. कीटाविलं तथा । प° । ६ घ. प्रोषितं । ७ ख. °ण्डाले सं° । ८ ग. °लस्य करे । ९ घ. °तितानां च संसर्गे मासं । १० ग. °त्र कार्यस्तिलै° । ११ ग. °त्र्यावर्तनं तथा । ए° । १२ क. ख. ङ. °त्तं न चोध्य° । १३ ग. °त्त्वा मुच्येत दुष्कृतैः । अ° । १४ ख. च. दुष्कृतम् ।

अत्र स्नानं जपो होमो ब्राह्मणानां च भोजनम्। उपवासस्तथा [1]दानमेकैकं पावयेन्न-रम् ॥ २१० ॥ स्नातः शुचिर्धौतवासाः शुद्धात्मा विजितेन्द्रियः। सात्त्विकं भाव-मास्थाय दानं दद्याद्विचक्षणः॥२११॥ सप्तव्याहृतिभिर्होमो द्विजैः कार्यो जितात्मभिः। उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया ॥ २१२ ॥ महापातकसंयुक्तो लक्षहो[3]मं तु कारयेत्। मुच्यते सर्वपापेभ्यो गा[4]यत्र्या चैव पावितः ॥२१३॥ अभ्यसे[5]च्च महापुण्यां गायत्रीं वेदमातरम्। गत्वाऽरण्ये नदीतीरे सर्वपापविशुद्धये ॥२१४॥ स्नात्वा[6] च विधि-वत्तत्रप्राणानायम्य वाग्यतः। प्राणायामैस्त्रिभिः पूतो गायत्रीं तु जपेद्द्विजः ॥२१५॥ अक्लिन्नवासाः स्थलगः शुचौ देशे समाहितः। पवित्रपाणिराचान्तो गायत्र्या जप-माचरेत् ॥ २१६ ॥ ऐहिकामुष्मि[7]कं पापं सर्वं निरवशेषतः। पञ्चरात्रेण गायत्रीं जपमानो व्यपोहति ॥ २१७ ॥ गायत्र्यास्तु परं नास्ति शोधनं पापकर्मणाम्। महाव्याहृतिसंयुक्तां प्रणवेन च संजपेत् ॥ २१८ ॥ ब्रह्मचारी निराहारः सर्वभूत-हिते रतः। गायत्र्या लक्ष[8]जप्येन सर्वपापैः प्रमुच्यते ॥ २१९ ॥ अयाज्ययाजनं कृत्वा भुक्त्वा चान्नं विगर्हितम्। गायत्र्यष्टसहस्रं तु जपं कृत्वा विशुध्यति ॥२२०॥ अहन्यहनि योऽधीते गायत्रीं वै द्विजोत्तमः। मासेन मुच्यते पापादुरगः कञ्चुका-द्यथा ॥ २२१ ॥ गायत्रीं यस्तु विप्रो वै जपेत नियतः सदा। स याति परमं स्थानं वायुभू[9]तः खमूर्तिमान् ॥२२२॥ प्रणवेन च संयुक्ता व्याहृतीः सप्त नित्यशः। गायत्रीं शिरसा सार्धं मनसा त्रिः पठेद्द्विजः ॥ २२३ ॥ निगृह्य चाऽऽत्मनः प्राणा-न्प्राणायामो विधीयते। प्राणायामत्रयं कुर्यान्नित्यमेव समाहितः ॥ २२४ ॥ मानसं वाचिकं पापं कायेनैव च यत्कृतम्। तत्सर्[10]वं नाशमायाति प्राणाया[11]मप्रभावतः ॥ २२५ ॥ ऋग्वेदमभ्यसेद्यस्तु यजुःशाखामथापि वा। सामानि सरहस्यानि सर्व-पापैः प्रमुच्येत ॥ २२६ ॥ पावमा[12]नीं तथा कौ[13]त्सीं पौ[14]रुषं सूक्तमेव च। ज[15]प्त्वा पापैः प्रमुच्येत सपि[16]त्र्यं माधुच्छन्दसम् ॥ २२७ ॥ मण्डलं( ल )ब्राह्मणं रुद्राः(द्रं)

१ ग. दानं देवतानां च पूजनम्। २ क. ङ. °न्नरः। स्ना°। ३ क. ख. ग. °मं सदा द्विजः। मु°। ४ ग. °यत्र्याश्चैव जापनात्। अ°। ५ क. ख. घ. °च्च तथा पु°। ६ क. ख. घ. °त्वा आचम्य विधिवत्ततः। प्राणान्समापयेत्। ७ ग. °कं लोके पापं सर्वं विशो°। ८ घ. च. °क्षजाप्ये°। ९ क. घ. °तः स्वमू°। १० ग. °र्वं नश्यते तूर्णं प्राणायामत्रये कृते। ऋ°। घ. °र्वं नश्यति क्षिप्रं प्रा°। ११ घ. °मत्रये कृते। ऋ°। १२ च. °मानीस्तथा। १३ ग. घ. च. कौत्सं। १४ क. ङ. पुरुषं। १५ क. ङ. दत्त्वा। १६ च. सपवित्रं म°। १७ ग. घ. °र्यं मधु°।

शुकोक्ताश्च बृहत्कथाः । वामदेव्यं बृहत्साम जप्त्वा पापैः प्रमुच्यते ॥ २२८ ॥ धर्मशास्त्रमिदं पुण्यं संवर्तेन तु भाषितम् । अधीत्य ब्राह्मणो गच्छेद्ब्रह्मणः सद्म शाश्वतम् ॥ २२९ ॥ चान्द्रायणं तु सर्वेषां पापानां पावनं परम् । कृत्वा शुद्धिमवाप्नोति परमं स्थानमेव च ॥ २३० ॥

इति श्रीसंवर्तप्रणीतं धर्मशास्त्रं संपूर्णम् ॥

( समाप्तेयं संवर्तस्मृतिः ) ।

ॐ तत्सद्ब्रह्मणे नमः ।

# बौधायनस्मृतिः ।

## प्रथमः प्रश्नः ।

### ( तत्र प्रथमोऽध्यायः ) ।

उपदिष्टो धर्मः प्रतिवेदम् ॥ १ ॥ तस्यानुव्याख्यास्यामः ॥ २ ॥ स्मार्तो द्वितीयः ॥ ३ ॥ तृतीयः शिष्टागमः ॥ ४ ॥ शिष्टाः खलु विगतमत्सरा निरहंकाराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः ॥ ५ ॥ धर्मेणाधिगतो येषां वेदः सपरिबृंहणः । शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः, इति ॥ ६ ॥ तदभावे दशावरा परिषत् ॥ ७ ॥ अथाप्युदाहरन्ति ॥ ८ ॥ चातुर्वैद्यं विकल्पी च अङ्गविद्धर्मपाठकः । आश्रमस्थास्त्रयो विप्राः पर्षदेषा[1] दशावरा ॥ ९ ॥ पञ्च वा स्युस्त्रयो वा स्युरेको वा स्यादनिन्दितः । प्रतिवक्ता तु धर्मस्य नेतरे तु सहस्रशः ॥ १० ॥ यथा दारुमयो हस्ती यथा चर्ममयो मृगः । ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥ ११ ॥ यद्वदन्ति तमोमूढा मूर्खा धर्ममजानतः । तत्पापं शतधा भूत्वा वक्तॄन्समधिगच्छति ॥ १२ ॥ बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः । तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशये ॥ १३ ॥ धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः । क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः ॥ १४ ॥ यथाऽश्मनि स्थितं तोयं मारुतोऽर्कश्च नाशयेत् । तद्वत्कर्तरि यत्पापं जलवत्संप्रतीयते ॥ १५ ॥ शरीरं बलमायुश्च वयः कालं च कर्म च । समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तानि निर्दिशेत् ॥ १६ ॥ अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते, इति ॥ १७ ॥ पञ्चधा विप्रतिपत्तिः ॥ १८ ॥ पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः ॥ १९ ॥ यानि दक्षिणतस्तानि[2] व्याख्यास्यामः ॥ २० ॥ यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति ॥ २१ ॥ अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रसंयानमिति[3] ॥ २२ ॥ इतरदितरस्मिन्कुर्वन्दुष्यतीतरदितरस्मिन् ॥ २३ ॥ तत्र[4] तत्र देशप्रामाण्यमेव स्यात् ॥ २४ ॥ मिथ्यैतदिति गौतमः ॥ २५ ॥

---

१ ख. परिषदे° । २ ख. °स्तान्यनुव्या° । ३ ख. °नमिति । तत्रेतरस्मिन्कु° । ४ ख. °त्र दे° ।

उभयं चैव नाऽऽद्रियेत शिष्टस्मृतिविरोधदर्शनात् ॥ २६ ॥ प्राग्विनशनात्प्रत्यक्कालकाद्वनाद्दक्षिणेन हिमवन्तमुदक्पारियात्रमेतदार्यावर्तं तस्मिन्य आचारः स प्रमाणम् ॥ २७ ॥ गङ्गायमुनयोरन्तरमित्येके ॥ २८ ॥ अथाप्यत्र भाल्लविनो गाथामुदाहरन्ति ॥ २९ ॥ पश्चात्सिन्धुर्विधरणी सूर्यस्योदयनं पुरः। यावत्कृष्णा विधावन्ति तावद्धि ब्रह्मवर्चसमिति ॥ ३० ॥ अवन्तयोऽङ्गमगधाः सुराष्ट्रा दक्षिणापथाः। उपावृत्सिन्धुसौवीरा एते संकीर्णयोनयः ॥ ३१ ॥ आरट्टान्कारस्करान्पुण्ड्रान्सौवीरान्वङ्गकलिङ्गान्प्रानूनानिति च गत्वा पुनः स्तोमेन यजेत, सर्वपृष्ठया वा ॥ ३२ ॥ अथाप्युदाहरन्ति ॥ ३३ ॥ पद्भ्यां स कुरुते पापं यः कलिङ्गान्प्रपद्यते। ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः ॥ ३४ ॥ बहूनामपि दोषाणां कृतानां दोषनिर्णये। पवित्रेष्टिं प्रशंसन्ति सा हि पावनमुत्तमम्, इति ॥ ३५ ॥ अथाप्युदाहरन्ति ॥ ३६ ॥ वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च। ऋतावृतौ प्रयुञ्जानः पापेभ्यो विप्रमुच्यते * पापेभ्यो विप्रमुच्यत इति ॥ ३७ ॥

इति प्रथमप्रश्ने प्रथमोऽध्यायः ॥ १ ॥

( अथ प्रथमप्रश्ने द्वितीयोऽध्यायः )।

अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यम् ॥ १ ॥ चतुर्विंशतिं द्वादश वा प्रतिवेदम् ॥ २ ॥ संवत्सरावमं वा प्रतिकाण्डम् ॥ ३ ॥ ग्रहणान्तं वा जीवितस्यास्थिरत्वात् ॥ ४ ॥ कृष्णकेशोऽग्नीनादधीतेति श्रुतिः ॥ ५ ॥ नास्य कर्म नियच्छन्ति किंचिदा मौञ्जिबन्धनात्। वृत्त्या शूद्रसमो ह्येष यावद्वेदेन जायत इति ॥ ६ ॥ गर्भादि संख्या वर्षाणां तदष्टमेषु ब्राह्मणमुपनयीत ॥ ७ ॥ त्र्यधिकेषु राजन्यम् ॥ ८ ॥ तस्मादेकाधिकेषु वैश्यम् ॥ ९ ॥ वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण ॥ १० ॥ गायत्रीत्रिष्टुब्जगतीभिर्यथाक्रमम् ॥ ११ ॥ आ षोडशादा द्वाविंशादा चतुर्विंशादित्यना( न )त्यय एषां क्रमेण ॥ १२ ॥ मौञ्जी धनुर्ज्या शाणीति मेखलाः ॥ १३ ॥ कृष्णरुरुबस्ताजिनान्याजिनानि ॥ १४ ॥ मूर्धललाटनासाग्रप्रमाणा याज्ञिकस्य

---

* न विद्यत एतत्क. पुस्तके।

१ ख. °भयमेव। २ °. प्रागदर्शना°। ३ ख. °विचरणा सू°। ४ ख. पुरा। ५ ख. कर्माणि य°। ६ ख. °नयेत्प्राधि°।

वृक्षस्य दण्डा विशेषाः पूर्वोक्ताः ॥ १५ ॥ भवत्पूर्वां भिक्षामध्यां याच्वान्तां भिक्षां चरेत्सप्ताक्षरां क्षां च हिं च न वर्धयेत् ॥ १६ ॥ भवत्पूर्वां ब्राह्मणो भिक्षेत भवन्मध्यां राजन्यो भवदन्त्यां वैश्यः सर्वेषु वर्णेषु॥१७॥ते ब्राह्मणाद्याः स्वकर्मस्थाः ॥ १८ ॥ सदाऽरण्यात्समिध आहृत्याऽऽदध्यात् ॥ १९ ॥ सत्यवादी ह्रीमाननहंकारः पूर्वोत्थायी जघन्यसंवेशी ॥ २० ॥ सर्वत्राप्रतिहतगुरुवाक्योऽन्यत्र पातकात् ॥ २१ ॥ यावदर्थसंभाषी स्त्रीभिः ॥ २२ ॥ नृत्तगीतवादित्रगन्धमाल्योपानच्छत्रधारणाञ्जनाभ्यञ्जनवर्जी ॥ २३ ॥ दक्षिणं दक्षिणेन सव्यं सव्येन चोपसंगृह्णीयाद्दीर्घमायुः स्वर्गं चेप्सन् ॥ २४ ॥ काममन्यस्मै साधुवृत्ताय गुरुणाऽनुज्ञातः ॥ २५ ॥ असावहं भो इति श्रोत्रे संस्पृश्य मनःसमाधानार्थम् ॥ २६ ॥ अधस्ताज्जान्वोरा पद्भ्याम् ॥ २७ ॥ नाऽऽसीनो नाऽऽसीनाय न शयानो न शयानाय नाप्रयतो नाप्रयताय ॥ २८ ॥ शक्तिविषये मुहूर्तमपि नाप्रयतः स्यात् ॥ २९ ॥ समिद्धार्युदकुम्भपुष्पान्नहस्तो नाभिवादयेद्यच्चान्यदप्येवं युक्तम् ॥ ३० ॥ न समवायेऽभिवादनमत्यन्तशः ॥ ३१ ॥ भ्रातृपत्नीनां युवतीनां च गुरुपत्नीनां जातवीर्यः ॥ ३२॥ नौशिलाफलककुञ्जरप्रासादकटेषु चक्रवत्सु चादोषं सहाऽऽसनम् ॥ ३३ ॥ प्रसाधनोच्छादनस्नापनोच्छिष्टभोजनानीति गुरोः ॥ ३४ ॥ उच्छिष्टवर्जनं तत्पुत्रेऽनूचाने वा ॥ ३५ ॥ प्रसाधनोच्छादनस्नापनवर्जनं च तत्पत्न्याम् ॥ ३६ ॥ धावन्तमनुधावेद्गच्छन्तमनुगच्छेत्तिष्ठन्तमनुतिष्ठेत् ॥ ३७ ॥ नाप्सु श्लाघमानः स्नायात् ॥ ३८ ॥ दण्ड इव प्लवेत ॥ ३९ ॥ अब्राह्मणादध्ययनमापादि ॥ ४० ॥ शुश्रूषाऽनुव्रज्या च यावदध्ययनम् ॥ ४१ ॥ तयोस्तदेव पावनम् ॥ ४२ ॥ भ्रातृपुत्रशिष्येषु चैवम् ॥ ४३ ॥ ऋत्विक्श्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थायाभिभाषणम् ॥४४॥ प्रत्याभिवादं इति कात्यः ॥ ४५ ॥ शिशावाङ्गिरसे दर्शनात्* ॥ ४६ ॥ ( × धर्मार्थौ यत्र न स्याताम् ॥ ४७ ॥ ) धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा। विद्यया सह मर्तव्यं न चैनामूषरे वपेत् ॥ ४८ ॥ अग्निरिव कक्षं दहति ब्रह्म पृष्ठ (ष्ट)मनादृतम्। तस्माद्वै शक्यं न ब्रूयाद्ब्रह्म मानमकुर्वतामिति ॥ ४९ ॥

---

* अत्र द्वितीयाध्यायसमाप्तिः ख. पुस्तके। × एतच्चिह्नान्तर्गतं न ख. पुस्तके।

---

१ ख. °न्तां चरे°। २ ख. °क्षरं भिक्षां च किंचन। ३ ख. °क्षिणेन सव्यं सव्येन चोपसंग्रहणं दीर्घ°। ४ ख. °मिद्धार्यु°। ५ ख. °वादयेदत्य°। ६ ख. °नां च गुरुपत्नीनां च जा° ७ ख. °पनोच्छिष्टव°। ८ ख. °दण्डवदाप्लवेत। ९ ख. °भिवादनम्। १० ख. °दन इति काम्यः। शि°। ११ ख. °मिलेते वै वचोऽस्मै वे°।

एवास्मै वचो वेदयन्ते ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत्तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग इति यामेव रात्रिं समिधं नाऽऽहराता इति ॥५०॥ तस्माद्ब्रह्मचारी यां रात्रिं समिधं नाऽऽहरत्यायुष एव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ ५१ ॥ दीर्घसत्रं ह वा एष उपैति यो ब्रह्मचर्यमुपैति स यामुपयन्समिधमादधाति सा प्रायणीयाऽथ यां स्नास्यन्सोदयनीयाऽथ या अन्तरेण सत्र्या एवास्य ताः ॥ ५२ ॥ ब्राह्मणो वै ब्रह्मचर्यमुपयंश्चतुर्धा भूतानि प्रविशत्यग्निं पदा मृत्युं पदाऽऽचार्यं पदाऽऽत्मन्येव चतुर्थः पादः परिशिष्यते स यदग्नौ समिधमादधाति य एवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशत्यथ यदात्मानं दरिद्रीकृत्याह्रीर्भूत्वा भिक्षते ब्रह्मचर्यं चरति य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशत्यथ यदाचार्यवचः करोति य एवास्याऽऽचार्ये पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशत्यथ यत्स्वाध्यायमधीते य एवास्याऽऽत्मनि पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशति न ह वै स्नात्वा भिक्षेतापि ह वै स्नात्वा भिक्षां चरत्यपि ज्ञातीनामशनायापि पितॄणामन्याभ्यः क्रियाभ्यः स यदन्यां भिक्षितव्यां न विन्देतापि वा स्वयमेवाऽऽचार्यजायां भिक्षेताथो स्वां मातरं नैनं सप्तम्यभिक्षिताऽतीयात् ॥ ५३ ॥ भैक्ष्य(क्ष)स्याचरणे दोषः पावकस्यासमिन्धने। सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत् ॥ ५४ ॥ तमेवं विद्वांसमेवं चरन्तं सर्वे वेदा अविशन्ति यथा ह वा अग्निः समिद्धो रोचत एवं ह वा एष स्नात्वा रोचते य एवं विद्वान्ब्रह्मचर्यं चरतीति ब्राह्मणमिति ब्राह्मणम्(मिति) ॥ ५५ ॥

इति प्रथमप्रश्ने द्वितीयोऽध्यायः ॥ २ ॥

(अथ प्रथमप्रश्ने तृतीयोऽध्यायः)।

अथ स्नातकस्य ॥ १ ॥ अन्तर्वास उत्तरीयम् ॥ २ ॥ वैणवं दण्डं धारयेत् ॥ ३ ॥ सोदकं च कमण्डलुम् ॥ ४ ॥ द्वियज्ञोपवीती ॥ ५ ॥ उष्णीषमजिनमुत्तरीयमुपा-

---

१ ख. °हरेता°। २ ख °त्रं वा। ३ ख. एव स्युस्ता ब्रा°। ४ ख. °न्येवास्य च°। ५ ख. एवैनमा°। ६ ख °त्यविज्ञाननाश°। ७ क. वा स्वामे°। ८ ख. °रति हि ब्राह्मणमिति हि ब्राह्मणम्। अ°। ९ ख. धारयन्। १० ख. °म्। य°।

नह्रौ छत्रं चौपासनं दर्शपूर्णमासौ ॥ ६ ॥ पर्वसु च केशश्मश्रुलोमनखवापनम् ॥७॥ तस्य वृत्तिः ॥ ८ ॥ ब्राह्मणराजन्यवैश्यरथकारेष्वामं लिप्सेत ॥ ९ ॥ भैक्षं वा ॥ १० ॥ वाग्यतास्तिष्ठेत् ॥ ११ ॥ सर्वाणि चास्य देवपितृसंयुक्तानि पाकयज्ञसंस्थानि भूतिकर्माणि कुर्वीतेति ॥ १२ ॥ एतेन विधिना प्रजापतेः परमेष्ठिनः परमर्षयः परमां काष्ठां गच्छन्तीति ह स्माऽऽह बौधायनः ॥ १३ ॥

इति प्रथमप्रश्ने तृतीयोऽध्यायः ॥ ३ ॥

(अथ प्रथमप्रश्ने चतुर्थोऽध्यायः)।

अथ कमण्डलुचर्यामुपदिशन्ति ॥ १ ॥ छागस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे। अप्सु चैव कुशस्तम्बे पावकः परिपठ्यते ॥ २ ॥ तस्माच्छौचं कृत्वा पाणिना परिमृजीत पर्यग्निकरणं हि तत् ॥ ३ ॥ उद्दीप्यस्व जातवेद इति पुनर्दाहाद्विशिष्यते ॥ ४ ॥ तत्रापि किंचित्संस्पृष्टं मनसि मन्येत कुशैर्वा तृणैर्वा प्रज्वाल्य प्रदक्षिणं परिदहनम् ॥ ५ ॥ अत ऊर्ध्वं श्ववायसप्रभृत्युपहतानामाग्निवर्णे इत्युपदिशन्ति ॥ ६ ॥ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः ॥ ७ ॥ भग्ने कमण्डलौ व्याहृतिभिः शतं जुहुयाज्जपेद्वा ॥ ८ ॥ भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ॥ ९ ॥ कपालानि संहृत्याप्सु प्रक्षिप्य सावित्रीं दशावरां कृत्वा पुनरेवान्यं गृह्णीयात् ॥ १० ॥ वरुणमाश्रित्यैतत्ते वरुण पुनरेतु मोमिति अक्षरं ध्यायेत् ॥ ११ ॥ शूद्राद्वृह्य शतं कुर्याद्वैश्यादर्धशतं स्मृतम्। क्षत्रियात्पञ्चविंशस्तु ब्राह्मणाद्दश कीर्तिताः ॥ १२ ॥ अस्तमित आदित्य उदकं गृह्णीयान्न गृह्णीयादिति मीमांसन्ते ब्रह्मवादिनः ॥ १३ ॥ गृह्णीयादित्येतदपरम् ॥ १४ ॥ यावदुदकं गृह्णीयात्तावत्प्राणमायच्छेत्, अग्निर्ह वै ह्युदकं गृह्णाति ॥ १५ ॥ कमण्डलूदकेनाभिषिक्तपाणिपादो यावदार्द्रं तावदशुचिः परेषामात्मानमेव पूतं करोति नान्यत्कर्म कुर्वीतेति विज्ञायते ॥ १६ ॥ अपि वा प्रतिशौचमा मणिबन्धाच्छुचिरिति बौधायनः ॥ १७ ॥ अथाप्युदाहरन्ति ॥१८॥ कमण्डलुर्द्विजातीनां शौचार्थं विहितः पुरा। ब्रह्मणा मुनिमुख्यैश्च तस्मात्तं धारयेत्सदा॥ १९ ॥ ततः शौचं ततः पानं संध्योपासनमेव च। निर्विशङ्केन कर्तव्यं यदीच्छेच्छ्रेय आत्मनः। कुर्याच्छुद्धेन मनसा न चित्तं दूषयेद्बुधः ॥ २० ॥ सह कमण्डलुनोत्पन्नः स्वयंभूस्तस्मात्कमण्डलुना चरेत् ॥२१॥

१ ख. °सनो द°। २ ख. °तिं। य ए°। ३ ख. °त्वा प°। ४ ख. °न्ति। भ°। ५ क. °रेवमामो°।

मूत्रपुरीषे कुर्वन्दक्षिणे हस्ते गृह्णाति सव्य आचमनीयमेतत्सिध्यति साधूनाम् ॥२२॥ यथा हि सोमसंयोगाच्चमसो मेध्य उच्यते। अपां तथैव संयोगान्नित्यो मेध्यः कमण्डलुः ॥२३॥ पितृदेवाग्निकार्येषु तस्मात्तं परिवर्जयेत् ॥ २४ ॥ तस्माद्विना कमण्डलुना नाध्वानं व्रजेन्न सीमान्तं न गृहाद्गृहम् ॥ २५ ॥ पदमपि न गच्छेदिषुमात्रादित्येके ॥ २६ ॥ यदिच्छेद्धर्मसंततिमिति बौधायनः ॥ २७ ॥ ऋग्विधेनेति वाग्वदति(?) ॥ २८ ॥

इति प्रथमप्रश्ने चतुर्थोऽध्यायः ॥ ४ ॥

(अथ प्रथमप्रश्ने पञ्चमोऽध्यायः)।

अथातः शौचाधिष्ठानम् ॥ १ ॥ अद्भिः शुध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुध्यति। अहिंसया च भूतात्मा मनः सत्येन शुध्यति, इति ॥ २ ॥ मनःशुद्धिरन्तःशौचम् ॥ ३ ॥ बहिःशौचं व्याख्यास्यामः ॥ ४ ॥ कौशं सूत्रं वा त्रिस्त्रिवृद्यज्ञोपवीतम् ॥ ५ ॥ आ नाभेः ॥ ६ ॥ दक्षिणं बाहुमुद्धृत्य सव्यमवधाय शिरोऽवदध्यात् ॥७॥ विपरीतं पितृभ्यः ॥ ८ ॥ कण्ठेऽवसक्तं निवीतम् ॥ ९ ॥ अधोऽवसक्तमधोवीतम् ॥ १० ॥ प्राङ्मुख उदङ्मुखो वाऽऽसीनः शौचमारभेत शुचौ देशे दक्षिणं बाहुं जान्वन्तरा कृत्वा प्रक्षाल्य पादौ पाणी चाऽऽमणिबन्धात् ॥ ११ ॥ पादप्रक्षालनोच्छेषणेन नाऽऽचामेत् ॥ १२ ॥ यद्याचामेद्भूमौ स्रावयित्वाऽऽचामेत् ॥ १३ ॥ ब्राह्मेण तीर्थेनाऽऽचामेत् ॥ १४ ॥ अङ्गुष्ठमूलं ब्राह्मं तीर्थम् ॥ १५ ॥ अङ्गुष्ठाग्रं पित्र्यम् ॥ १६ ॥ अङ्गुल्यग्रं दैवम् ॥ १७ ॥ अङ्गुलिमूलमार्षम् ॥ १८ ॥ नाङ्गुलीभिर्न सबुद्बुदाभिर्न सफेनाभिर्नोष्णाभिर्न क्षाराभिर्न लवणाभिर्न कलुषाभिर्न विवर्णाभिर्न दुर्गन्धरसाभिर्न हसन्न जल्पन्न तिष्ठन्न विलोकयन्न प्रह्वो न प्रणतो न मुक्तशिखो न प्रावृतकण्ठो न वेष्टितशिरा न त्वरमाणो नायज्ञोपवीती न प्रसारितपादो न बद्धकक्ष्यो न बहिर्जानुः शब्दमकुर्वंस्त्रिरपो हृदयंगमाः पिबेत् ॥ १९ ॥

१ ख. यदीच्छे°। २ ख. °बन्धनात्। ३ ख. °र्न सफे°। ४ ख. °र्न कटुकाभिर्न हृ°। ५ ख. °ष्टन्नावलो°। ६ ख. °कण्ठो न वे°। ७ ख. °दो वाऽनाबद्धकच्छो न बद्ध°।

त्रिः परिमृजेत् ॥ २० ॥ द्विरित्येके ॥ २१ ॥ सकृदुभयं शूद्रस्य स्त्रियाश्च ॥ २२ ॥ अथाप्युदाहरन्ति ॥ २३ ॥ गताभिर्हृदयं विप्रः कण्ठ्याभिः क्षत्रियः शुचिः । वैश्योऽद्भिः प्राशिताभिः स्यात्स्त्रीशूद्रौ स्पृश्य चान्ततः, इति ॥ २४ ॥ दन्तवद्दन्तसक्तेषु दन्तवत्तेषु धारणा । स्रस्तेषु तेषु नाऽऽचामेत्तेषां संस्राववच्छुचिः, इति ॥२५॥ अथाप्युदाहरन्ति ॥ २६ ॥ दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् । आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः, इति ॥२७॥ खान्यद्भिः संस्पृश्य पादौ नाभिं शिरः सव्यं पाणिमनन्तः ॥ २८ ॥ तैजसं चेदादायोच्छिष्टी स्यात्तदुदस्याऽऽचम्याऽऽदास्यन्नद्भिः प्रोक्षेत् ॥२९॥ अथ चेदन्नेनोच्छिष्टी स्यात्तदुदस्याऽऽचम्याऽऽदास्यन्नद्भिः प्रोक्षेत् ॥ ३० ॥ अथ चेदद्भिरुच्छिष्टी स्यात्तदुदस्याऽऽचम्याऽऽदास्यन्नद्भिः प्रोक्षेत् ॥ ३१ ॥ एतदेव विपरीतममत्रे ॥ ३२ ॥ वानस्पत्ये विकल्पः ॥ ३३ ॥ तैजसानामुच्छिष्टानां गोशकृन्मृद्भस्मभिः परिमार्जनमन्यतमेन वा ॥३४॥ ताम्ररजतसुवर्णानामम्लैः ॥ ३५ ॥ अमत्राणां दहनम् ॥ ३६ ॥ दारवाणां तक्षणम् ॥ ३७ ॥ वैणवानां गोमयेन ॥ ३८ ॥ फलमयानां गोवालरज्ज्वा ॥ ३९ ॥ कृष्णाजिनानां बिल्वतण्डुलैः ॥ ४० ॥ कुतपानामरिष्टैः ॥ ४१ ॥ और्णानामादित्येन ॥ ४२ ॥ क्षौमाणां गौरसर्षपकल्केन ॥ ४३ ॥ मृदा चेलानाम् ॥ ४४ ॥ चेलवच्चर्मणाम् ॥ ४५ ॥ तैजसवदुपलमणीनाम् ॥ ४६ ॥ दारुवदस्थ्नाम् ॥ ४७ ॥ क्षौमवच्छङ्खशृङ्गशुक्तिदन्तानाम्, पयसा वा ॥ ४८ ॥ चक्षुर्घ्राणानुकूल्याद्वा मूत्रपुरीषासृक्शुक्रकुणपस्पृष्टानां पूर्वोक्तानामन्यतमेन त्रिःसप्तकृत्वः परिमार्जनम् ॥ ४९ ॥ अतैजसानामेवंभूतानामुत्सर्गः ॥ ५० ॥ वचनाद्यज्ञे चमसपात्राणाम् ॥ ५१ ॥ न सोमेनोच्छिष्टा भवन्तीति श्रुतिः ॥ ५२ ॥ कालोऽग्निर्मनसः शुद्धिरुदकाद्युपलेपनम् । अविज्ञातं च भूतानां षड्विधं शौचमुच्यते, इति ॥ ५३ ॥ अथाप्युदाहरन्ति ॥ ५४ ॥ कालं देशं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च विज्ञाय शौचं शौचज्ञः कुशलो धर्मेप्सुः

१ ख. °न्तलग्नेषु द° । २ ख. °न्तसक्तेषु यच्चाप्यन्तर्मुखं भ° । ३ ख. °च्छिष्टः स्यात्त° । ४ ख. °दद्भिः सोच्छिष्टः स्यात्त° । ५ ख. °ष्टैः । ऊर्णा° । ६ ख. °म् । क्षौ° । ७ ख. °षां । मू° । ८ ख. °स्मभिः । प° । ९ ख. च शौचज्ञः । १० ख. °मेप्सुः स° ।

समाचरेत् ॥ ५५ ॥ नित्यं शुद्धः[1] कारुहस्तः पण्यं यच्च प्रसारितम् । ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति श्रुतिः ॥ ५६ ॥ वत्सः प्रस्रवणे मेध्यः शकुनिः फलशातने । स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः ॥ ५७ ॥ आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् । अदूष्याः सतता धारा वातोद्धूताश्च रेणवः ॥५८॥ अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः । तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च॥५९॥ चैत्यवृक्षं चितिं यूपं चण्डालं वेदविक्रयम् । एतानि ब्राह्मणः स्पृष्ट्वा सचेलो[2] जलमाविशेत् ॥६०॥ आत्मशय्याऽऽसनं वस्त्रं जायाऽपत्यं कमण्डलुः । =शुचीन्यात्मन एतानि परेषामशुचीनि तु ॥ ६१ ॥ आसनं शयनं यानं नावः[3] पथि तृणानि च । श्वचण्डालपतितस्पृष्टं मारुतेनैव शुध्यति ॥ ६२ ॥ खलक्षेत्रेषु यद्धान्यं कूपवापीषु यज्जलम् । अभोज्यादपि तद्भोज्यं यच्च गोष्ठगतं पयः ॥ ६३ ॥ त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् । अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा[4] प्रशस्यते ॥ ६४ ॥ आपः पवित्रा भूमिगता गोतृप्तिर्यासु जायते । अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः[5] ॥ ६५ ॥ भूमेस्तु संमार्जनप्रोक्षणोपलेपनावस्तरणोल्लेखनैर्यथास्थानं दोषविशेषात्प्रायत्यम्[6]॥६६॥ अथाप्युदाहरन्ति ॥ ६७ ॥ गोचर्ममात्रमब्बिन्दुर्भूमेः शुध्यति पातितः । समूढमसमूढं वा यत्रामेध्यं न लक्ष्यत इति ॥ ६८ ॥ परोक्षमधिश्रितस्यान्नस्यावद्योत्याभ्युक्षणम् ॥ ६९ ॥ तथाऽऽपणे( णी )यानां च भक्ष्याणाम् ॥ ७० ॥ बीभत्सवः शुचिकामा हि देवा नाश्रद्दधानाय हविर्जुषन्त इति ॥ ७१ ॥ शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः । मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥ ७२ ॥ प्रजापतिस्तु तानाह न समं विषमं हि तत् । हतमश्रद्दधानस्य श्रद्धापूतं विशिष्यत इति ॥ ७३ ॥ अथाप्युदाहरन्ति ॥ ७४ ॥ अश्रद्धा परमः पाप्मा श्रद्धा हि परमं तपः । तस्मादश्रद्धया दत्तं हविर्नाश्नन्ति देवताः ॥ ७५ ॥ इष्ट्वा दत्त्वाऽपि वा मूर्खः स्वर्गं न हि स गच्छति । शङ्काविहतचारित्रो यः स्वाभिप्रायमाश्रितः ॥ ७६ ॥ शास्त्रातिगः स्मृतो मूर्खो धर्मतन्त्रोपरोधनादिति ॥ ७७ ॥ शाकपुष्पफलमूलौषधीनां तु प्रक्षालनम् ॥ ७८ ॥

---

= एतदर्धस्थानेऽयं पाठः ख. पुस्तके " आत्मनः शुचिरेतानि परेषामशुचिर्भवेत् " इति ।

---

१ ख. °त्यं शुद्धमि° । २ ख. °चेलः स्नानमाचरेत् । आ° । ३ ख. नावापथतृ° । ४ ख. °चाऽभिपूजितम् । आ° । ५ ख. °न्विता इति । भू° । ६ ख. °त्प्राशस्त्यम् ।

शुष्कं तृणमयाज्ञिकं काष्ठं लोष्टं वा तिरस्कृत्याहोरात्रयोरुदग्दक्षिणामुखः प्रावृत्य शिर उच्चरेदवमेहेद्वा ॥ ७९ ॥ मूत्रे मृदाऽद्भिः प्रक्षालनम् ॥ ८० ॥ त्रिः पाणेः ॥ ८१ ॥ तद्वत्पुरीषे ॥ ८२ ॥ पर्यायात्रिस्त्रिः पायोः पाणेश्च ॥ ८३ ॥ मूत्रवद्रेतस उत्सर्गे ॥ ८४ ॥ नीवीं विस्रस्य परिधायाप उपस्पृशेत् ॥ ८५ ॥ आर्द्रतृणं गोमयं भूमिं वा समुपस्पृशेत् ॥ ८६ ॥ नाभेरधःस्पर्शनं कर्मयुक्तो वर्जयेत् ॥ ८७ ॥ ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यमिति श्रुतिः ॥ ८८ ॥ शूद्राणामार्याधिष्ठितानामर्धमासि मासि वा वपनमार्यवदाचमनकल्पः ॥ ८९ ॥ वैश्यः कुसीदमुपजीवेत् ॥ ९० ॥ पञ्चविंशतिस्त्वेव पञ्चमाषकी स्यात् ॥ ९१ ॥ अथाप्युदाहरन्ति ॥ ९२ ॥ यः समर्घमृणं गृह्य महार्घं संप्रयोजयेत् । स वै वार्धुषिको नाम सर्वधर्मेषु गर्हितः ॥ ९३ ॥ वृद्धिं च भ्रूणहत्यां च तुलया समतोलयत् । अतिष्ठद्भ्रूणहा कोट्यां वार्धुषिः समकम्पत, इति ॥ ९४ ॥ गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत् ॥ ९५ ॥ कामं तु परिलुप्तकृत्याय कदर्याय नास्तिकाय पापीयसे पूर्वौ दद्यातमाम् ॥ ९६ ॥ अयज्ञेनाविवाहेन वेदस्योत्सादनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ९७ ॥ ब्राह्मणातिक्रमो नास्ति मूर्खे मन्त्रविवर्जिते । ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ ९८ ॥ गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया । कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥ ९९ ॥ मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि । कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥ १०० ॥ + वेदः कृषिविनाशाय कृषिर्वेदविनाशिनी । शक्तिमानुभयं कुर्यादशक्तस्तु कृषिं त्यजेत् ॥ १०१ ॥ न वै देवान्पीवरोऽसंयतात्मा रोरूयमाणः ककुदी समश्नुते । चलत्तुन्दी रभसः कामवादी कृशास इत्यणवस्तत्र यान्ति ॥ १०२ ॥ यद्यौवने चरति विभ्रमेण सद्वाऽसद्वा यादृशं वा यदा वा । उत्तरे चेद्वयसि साधुवृत्तस्तदेवास्य भवति नेतराणि ॥ १०३ ॥ शोचेत मनसा नित्यं दुष्कृतान्यनुचिन्तयन् । तपस्वी चाप्रमादी च ततः पापात्प्रमुच्यते ॥ १०४ ॥ स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् । न तैरुच्छिष्टभावः स्यात्तुल्यास्ते भूमिगैः सहेति ॥ १०५ ॥

+ एतदर्धस्थानेऽयं पाठः ख. पुस्तके-"कृषिर्वेदविनाशाय वेदः कृषिविनाशकः" इति।

---

१ ख. °ज्ञिकका°। २ ख. °रेदेव°। ३ ख. °र्यायात्रिस्त्रिः। ४ क. आर्द्रं तृ°। ५ ख. °सि वा। ६ ख. °मधारयत्।

सपिण्डेष्वादशाहम् ॥ १०६ ॥ सपिण्डेष्वादशाहमाशौचमिति जननमरणयोरधिकृत्य वदेत्यृत्विग्दीक्षितब्रह्मचारिवर्जम्[१] ॥ १०७ ॥ सपिण्डता त्वा सप्तमात्सापिण्डेषु ॥ १०८ ॥ आ सप्तमासादा दन्तजननाद्वोदकोपस्पर्शनम्[२] । पिण्डोदकक्रिया प्रेते नात्रिवर्षे विधीयते ॥ १०९ ॥ आ दन्तजननाद्वाऽपि दहनं[४] च न कारयेत् । अप्रत्तासु च कन्यासु प्रत्तास्वेके ह कुर्वते ॥ ११० ॥ लोकसंग्रहणार्थं हि तदमन्त्राः स्त्रियो मताः । स्त्रीणां[५] कृतविवाहानां त्र्यहाच्छुध्यन्ति बान्धवाः ॥ १११ ॥ यथोक्तेनैव कल्पेन शुध्यन्ति च सनाभयः, इति ॥११२॥ अपि च प्रपितामहः पितामहः पिता स्वयं[६] सोदर्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रस्तत्पुत्रवर्जं तेषां च पुत्रपौत्रमविभक्तदायं सपिण्डानाचक्षते ॥ ११३ ॥ विभक्तदायानपि सकुल्यानाचक्षते ॥ ११४ ॥ असत्स्वन्येषु तद्गामी ह्यर्थो भवति ॥ ११५ ॥ सपिण्डाभावे सकुल्यः ॥ ११६ ॥ तदभावे पिताऽऽचार्योऽन्तेवास्यृत्विग्वा हरेत् ॥ ११७ ॥ तदभावे राजा तत्स्वं त्रैविद्यवृद्धेभ्यः संप्रयच्छेत् ॥ ११८ ॥ न त्वेव कदाचित्स्वयं राजा ब्राह्मणस्वमाददीत ॥ ११९ ॥ अथाप्युदाहरन्ति ॥ १२० ॥* ब्रह्मस्वं पुत्रपौत्रघ्नं विषमेकाकिनं हरेत् । न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥१२१॥ तस्माद्राजा ब्राह्मणस्वं नाऽऽददीत परमं ह्येतद्विषं यद्ब्राह्मणस्वमिति ॥ १२२ ॥ जननमरणयोः संनिपाते[७] समानो दशरात्रः ॥ १२३ ॥ अथ यदि दशरात्रात्संनिपतेयुराद्यं दशरात्रमाशौचमा नवमाद्दिवसात् ॥ १२४ ॥ जनने तावन्मातापित्रोर्दशाहमाशौचम् ॥ १२५ ॥ मातुरित्येके तत्परिहरणात् ॥ १२६ ॥ पितुरित्यपरे शुक्रप्राधान्यात् ॥ १२७ ॥ अयोनिजा ह्यपि पुत्राः श्रूयन्ते मातापित्रोरेव तु संसर्गसामान्यात् ॥ १२८ ॥ मरणे तु यथा बालं पुरस्कृत्य यज्ञोपवीतान्यपसव्यानि

* एतद्वचनस्थानेऽयं पाठः ख. पुस्तके–"न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्" इति ।

---

१ ख. °दन्ति । ऋत्वि° । २ ख °म् । असपिण्डत्वात्सापि° । ३ ख. °म् । प्रेतानां त्रिवर्षे उदकक्रिया वि° । ४ ख. °नं नास्य का° । ५ ख. स्त्रीणामकृ° । ६ ख. स्वसोद° । ७ ख °निपातेषु° ।

कृत्वा तीर्थमवतीर्य सकृत्सकृन्निमज्ज्योन्मज्ज्योत्तीर्याऽऽचम्य तत्प्रत्ययमुदकमासिच्यात एवोत्तीर्याऽऽचम्य गृहद्वार्यङ्गारमुदकमिति संस्पृश्याक्षारलवणाशिनो दशाहं कटमासीरन् ॥ १२९ ॥ एकादश्यां द्वादश्यां वा श्राद्धकर्म ॥ १३० ॥ शेषक्रियायां लोकोऽनुरोद्धव्यः ॥ १३१ ॥ अत्राप्यसपिण्डेषु यथासन्नं त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत ॥ १३२ ॥ आचार्योपाध्यायतत्पुत्रेषु त्रिरात्रम् ॥ १३३ ॥ ऋत्विजां च ॥ १३४ ॥ शिष्यसतीर्थ्यसब्रह्मचारिषु त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत ॥ १३५ ॥ गर्भस्रावे गर्भमाससंमिता रात्रयः स्त्रीणाम् ॥ १३६ ॥ परशवोपस्पर्शनेऽनभिसंधिपूर्वं सचेलोऽपः स्पृष्ट्वा सद्यः शुद्धो भवति ॥ १३७ ॥ अभिसंधिपूर्वं त्रिरात्रम् ॥ १३८ ॥ ऋतुमत्यां च यस्ततो जायते सोऽभिशस्त इति व्याख्यातान्यस्यै व्रतानि ॥ १३९ ॥ * वेदविक्रयिणं यूपं पतितं चितिमेव च । स्पृष्ट्वा समाचरेत्स्नानं श्वानं चण्डालमेव च ॥ १४० ॥ ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे । कृमिरुत्पद्यते तत्र प्रायश्चित्तं कथं भवेत् ॥ १४१ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । त्र्यहं स्नात्वा च पीत्वा च कृमिदष्टः शुचिर्भवेत् ॥ १४२ ॥ शुनोपहतः सचेलोऽवगाहेत ॥ १४३ ॥ प्रक्षाल्य वा तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाऽऽचम्य प्रयतो भवति ॥ १४४ ॥ अथाप्युदाहरन्ति ॥ १४५ ॥ शुना दष्टस्तु यो विप्रो नदीं गत्वा समुद्रगाम् । प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥ १४६ ॥ सुवर्णरजताभ्यां वा गवां शृङ्गोदकेन वा । नवैश्च कलशैः स्नात्वा सद्य एव शुचिर्भवेत्, इति ॥ १४७ ॥ अभक्ष्याः पशवो ग्राम्याः ॥ १४८ ॥ क्रव्यादाः शकुनयश्च ॥ १४९ ॥ तथा कुक्कुटसूकरम् ॥ १५० ॥ अन्यत्राजाविभ्यः ॥ १५१ ॥ भक्ष्याः श्वाविड्गोधाशशशल्यककच्छपखड्गाः खड्गवर्जाः पञ्च पञ्चनखाः ॥ १५२ ॥ तथर्श्यहरिणपृषतमहिषवराहकुलङ्गाः कुलङ्गवर्जाः पञ्च द्विखुरिणः ॥ १५३ ॥ पक्षिणस्तित्तिरिकपोतकपिञ्जलवार्ध्रीणसमयूरवारणा वारणवर्जाः पञ्च विष्किराः ॥ १५४ ॥ मत्स्याः सहस्रदंष्ट्रश्चिलिचिमो वर्मिबृहच्छिरोमशकरिरोहितराजीवाः ॥ १५५ ॥ अनिर्दशाहसंधिनीक्षीरमपेयम् ॥ १५६ ॥ विवत्सान्यवत्सयोश्च ॥ १५७ ॥ आविकमौष्ट्रिकमैकशफमपेयम् ॥ १५८ ॥ अपेयपयःपाने

---

* एतद्वचनं न विद्यते ख. पुस्तके ।

१ ख. °ज्ज्योत्ती° । २ ख. °कमुत्सिच्या° । ३ ख. °क्रियया लो° । ४ ख. कुर्वन्ति । ५ ख. °च सशि° । ६ ख. कुर्वन्ति । ७ ख. यतो । ८ ख. °श्य ततः शुचिः । सु° । ९ क. °म्याः । अभक्ष्याः पशवो ग्राम्याः । क्र° । १० ख. कुलुङ्ग° । ११ ख वङ्गिबृहच्छिरसमशकरो° ।

कृच्छ्रोऽन्यत्र गव्यात् ॥ १५९ ॥ गव्ये तु त्रिरात्रमुपवासः ॥ १६० ॥ पर्युषितं शाकयूषमांससर्पिःशृतधानागुडदधिमधुसक्तुवर्जम् ॥ १६१ ॥ शुक्तानि तथा जातो गुडः ॥ १६२ ॥ श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य तैष्यां माघ्यां वोत्सृजेयुरुत्सृजेयुः ॥ १६३ ॥

इति प्रथमप्रश्ने पञ्चमोऽध्यायः ॥ ५ ॥

---

( अथ प्रथमप्रश्ने षष्ठोऽध्यायः )।

शुचिमध्वरं देवा जुषन्ते ॥ १ ॥ शुचिकामा हि देवाः शुचयश्च ॥ २ ॥ तदेषाऽभिवदति ॥ ३ ॥ शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः। ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः, इति ॥ ४ ॥ अहतं वाससां शुचिस्त(चि त)स्माद्यत्किंचेज्यासंयुक्तं स्यात्सर्वं तदहतैर्वासोभिः कुर्यात् ॥ ५ ॥ प्रक्षालितोपवातान्यक्लिष्टानि वासांसि पत्नीयजमानावृत्विजश्च परिदधीरन् ॥ ६ ॥ एवं प्रक्रमादूर्ध्वम् ॥ ७ ॥ दीर्घसोमेषु सत्रेषु चैवम् ॥ ८ ॥ यथासमाम्नातं च ॥ ९ ॥ यथैतदभिचरणीयेष्विष्टिपशुसोमेषु लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुश्चित्रवाससश्चित्रासङ्गा वृषाकपाविति च ॥ १० ॥ अग्न्याधाने क्षौमाणि वासांसि तेषामलाभे कार्पासिकान्यौर्णानि वा भवन्ति ॥ ११ ॥ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां मृदाऽद्भिरिति प्रक्षालनम् ॥ १२ ॥ वासोवत्तार्प्यवृकलानाम् ॥ १३ ॥ वल्कलवत्कृष्णाजिनानाम् ॥ १४ ॥ न परिहितमधिरूढमप्रक्षालितं प्रावरणम् ॥ १५ ॥ नापल्पूलितं मनुष्यसंयुक्तं देवत्रा युञ्ज्यात् ॥ १६ ॥ घनाया भूमेरुपघात उपलेपनम् ॥ १७ ॥ सुषिरायाः कर्षणम् ॥ १८ ॥ क्लिन्नाया मेध्यमाहृत्य प्रच्छादनम् ॥ १९ ॥ चतुर्भिः शुध्यते भूमिर्गोभिराक्रमणात्खननाद्दहनादभिवर्षणात् ॥ २० ॥ पञ्चमाच्चोपलेपनात्षष्ठात्कालात् ॥ २१ ॥ असंस्कृतायां भूमौ न्यस्तानां तृणानां प्रक्षालनम् ॥ २२ ॥ परोक्षोपहतानामभ्युक्षणम् ॥ २३ ॥ एवं क्षुद्रसमिधाम् ॥ २४ ॥ महतां काष्ठानामुपघाते प्रक्षाल्यावशोषणम् ॥ २५ ॥ बहूनां तु प्रोक्षणम् ॥ २६ ॥ दारुमयाणां पात्राणामुच्छिष्ट-

१ ख. °जेयुः।

समन्वारब्धानामवलेखनम् ॥ २७ ॥ उच्छिष्टलेपोपहतानामवतक्षणम् ॥ २८ ॥ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः ॥ २९ ॥ तदेतदन्यत्र निर्देशात् ॥ ३० ॥ यथैतदग्निहोत्रे घ(घ)र्मोच्छिष्टे च दधिघ(घ)र्मे च कुण्डपायिनामयने चोत्सर्गिणामयने च दाक्षायणयज्ञे चेडादधे च चतुश्चक्रे च ब्रह्मौदनेषु च तेषु सर्वेषु दर्भैरद्भिः प्रक्षालनम् ॥ ३१ ॥ सर्वेष्वेव सोमभक्षेष्वद्भिरेव मार्जालीये प्रक्षालनम् ॥ ३२ ॥ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गो मृन्मयानां पात्राणाम् ॥ ३३ ॥ मृन्मयानां पात्राणामुच्छिष्टसमन्वारब्धानामवकूलनम् ॥ ३४ ॥ उच्छिष्टलेपोपहतानां पुनर्दहनम् ॥ ३५ ॥ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः ॥ ३६ ॥ तैजसानां पात्राणां पूर्ववत्परिमृष्टानां प्रक्षालनम् ॥ ३७ ॥ परिमार्जनद्रव्याणि गोशकृन्मृद्भस्मेति ॥ ३८ ॥ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां पुनःकरणम् ॥ ३९ ॥ गोमूत्रे वा सप्तरात्रं परिशायनम् ॥ ४० ॥ महानद्यां वैवम् ॥ ४१ ॥ अश्ममयानामलाबुबिल्वविनाडानां गोवालैः परिमार्जनम् ॥ ४२ ॥ नडवेणुशरकुशव्यूतानां गोमयेनाद्भिरिति प्रक्षालनम् ॥ ४३ ॥ व्रीहीणामुपघाते प्रक्षाल्यावशोषणम् ॥ ४४ ॥ बहूनां तु प्रोक्षणम् ॥ ४५ ॥ तण्डुलानामुत्सर्गः ॥ ४६ ॥ एवं सिद्धहविषाम् ॥ ४७ ॥ महतां श्ववायसप्रभृत्युपहतानां तं देशं पुरुषान्नमुद्धृत्य पवमानः सुवर्जन इति एतेनानुवाकेनाभ्युक्षणम् ॥ ४८ ॥ मधूदके पयोविकारे पात्रात्पात्रान्तरानयने शौचम् ॥४९॥ एवं तैलसर्पिषी उच्छिष्टसमन्वारब्धे उदकेऽवधायोपयोजयेत् ॥५०॥ अमेध्याभ्याधाने समारोप्याग्निं मथित्वा पवमानेष्टिः ॥ ५१ ॥ शौचदेशमन्त्रावृदर्थद्रव्यसंस्कारकालभेदेषु पूर्वपूर्वप्राधान्यं पूर्वपूर्वप्राधान्यम् ॥ ५२ ॥

इति प्रथमप्रश्ने षष्ठोऽध्यायः ॥ ६ ॥

(अथ प्रथमप्रश्ने सप्तमोऽध्यायः)।

उत्तरत उपचारो विहारः ॥ १ ॥ तथाऽपवर्गः ॥ २ ॥ विपरीतं पित्र्येषु ॥ ३ ॥ पादोपहतं प्रक्षालयेत् ॥ ४ ॥ अङ्गमुपस्पृश्य सिचं वाऽप उपस्पृशेत् ॥ ५ ॥ एवं

१ ख. 'लेपन'। २ ख. 'यणे यज्ञेऽर्धोदये चतु'। ३ ख. 'शयीत । म'। ४ ख. 'विलाडानां'। ५ ख. नलवे'। ६ ख. 'र्ववत्प्राधान्यम्।

छेदनभेदनखननिरसनपित्र्यराक्षसनैर्ऋतरौद्राभिचरणीयेषु ॥ ६ ॥ न मन्त्रवता यज्ञाङ्गेनाऽऽत्मानमभिपरिहरेत् ॥ ७ ॥ अभ्यन्तराणि यज्ञाङ्गानि बाह्या ऋत्विजः ॥ ८ ॥ पत्नीयजमानावृत्विग्भ्योऽन्तरतमौ ॥ ९ ॥ यज्ञाङ्गेभ्य आज्यमाज्याद्धवींषि हविर्भ्यः पशुः पशोः सोमः सोमादग्नयः ॥ १० ॥ यथाकर्मर्त्विजो न विहाराद्भिपर्यावर्तेरन् ॥ ११ ॥ प्राङ्मुखश्चेद्दक्षिणमंसमभिपर्यावर्तेत ॥ १२ ॥ प्रत्यङ्मुखः सव्यम् ॥ १३ ॥ अन्तरेण चात्वालोत्करौ यज्ञस्य तीर्थम् ॥ १४ ॥ आ चात्वालादाहवनीयोत्करौ ॥ १५ ॥ ततः कर्तारो यजमानः पत्नी च प्रपद्येरन्, विसंस्थिते ॥ १६ ॥ संस्थिते च संचरोऽनुत्करदेशात् ॥ १७ ॥ नाप्रोक्षितमप्रपन्नं क्लिन्नं काष्ठं समिधं वाऽभ्यादध्यात् ॥१८॥ अग्रेणाऽऽहवनीयं ब्रह्मयजमानौ प्रपद्येते ॥ १९ ॥ जघनेनाऽऽहवनीयमित्येके ॥ २० ॥ दक्षिणेनाऽऽहवनीयं ब्रह्मायतनं तमपरेण यजमानस्य ॥ २१ ॥ उत्तरां श्रोणिमुत्तरेण होतुः ॥ २२ ॥ उत्कर आग्नीध्रस्य ॥ २३ ॥ जघनेन गार्हपत्यं पत्न्याः ॥ २४ ॥ तेषु काले काल एव दर्भान्संस्तृणाति ॥ २५ ॥ एकैकस्य चोदकमण्डलुरुपात्तः स्यादाचमनार्थः ॥ २६ ॥ व्रतोपेतो दीक्षितः स्यात् ॥ २७ ॥ न परपापं वदेन्न क्रुध्येन्न रोदेन्मूत्रपुरीषे नावेक्षेत ॥ २८ ॥ अमेध्यं दृष्ट्वा जपति ॥ २९ ॥ अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीरिति ॥ ३० ॥

इति प्रथमप्रश्ने सप्तमोऽध्यायः ॥ ७ ॥

=====

( अथ प्रथमप्रश्नेऽष्टमोऽध्यायः )।

चत्वारो वर्णा ब्राह्मणक्षत्रियविट्शूद्राः ॥ १ ॥ तेषां वर्णानुपूर्व्येण चतस्रो भार्या ब्राह्मणस्य ॥ २ ॥ तिस्रो राजन्यस्य ॥ ३ ॥ द्वे वैश्यस्य ॥ ४ ॥ एका शूद्रस्य ॥ ५ ॥ तासु पुत्राः सवर्णानन्तरासु सवर्णाः ॥ ६ ॥ एकान्तरद्व्यन्तरास्वम्बष्ठोग्रनिषादाः ॥ ७ ॥ प्रतिलोमास्वायोगवमागधवैणक्षत्रपुल्कसकुक्कुटवैदेहकचण्डालाः ॥ ८ ॥ अम्बष्ठात्प्रथमायां श्वपाकः ॥९॥ उग्राद्द्वितीयायां वैणः ॥१०॥ निषादात्तृ-

१ ख. 'षु। अप उपस्पृशन्न म°'। २ ख. °थाकर्मम्मृंत्विजो। ३ ख. कर्तारौ। ४ ख. °मानपत्नी च प्रपद्येते। वि°। ५ ख. तदपरे°। ६ ख. °तो वा दी°। ७ ख. °टकवै°।

त्रीयायां पुल्कसः ॥ ११ ॥ विपर्यये कुक्कुटः ॥ १२ ॥ निषादेन निषाद्यामा पञ्च-माज्जातोऽपहन्ति शूद्रताम् ॥ १३ ॥ तमुपनयेत्षष्ठं याजयेत् ॥ १४ ॥ सप्तमो विकृ[३]-तबीजः समबीजः सम इत्येकेषां संज्ञाः क्रमेण निपतन्ति ॥ १५ ॥ त्रिषु वर्णेषु सादृश्यादव्रतो जनयेत्तु यान्। तान्सावित्रीपरिभ्रष्टान्व्रात्यानाहुर्मनीषिणो व्रात्यानाहु-र्मनीषिण इति ॥ १६ ॥

इति प्रथमप्रश्नेऽष्टमोऽध्यायः ॥ ८ ॥

(अथ प्रथमप्रश्ने नवमोऽध्यायः)।

रथकाराम्बष्ठसूतोग्रमागधायोगववैणक्षत्तृपुल्कसकुक्कुटवैदेहकचण्डालश्वपाकप्रभृतयः ॥ १ ॥ तत्र सवर्णासु सवर्णाः ॥ २ ॥ ब्राह्मणात्क्षत्रियायां ब्राह्मणो वैश्या-यामम्बष्ठः शूद्रायां निषादः ॥ ३ ॥ पारशव इत्येके ॥ ४ ॥ क्षत्रियाद्वैश्यायां क्षत्रियः शूद्रायामुग्रः ॥ ५ ॥ वैश्याच्छूद्रायां रथकारः ॥ ६ ॥ शूद्राद्वैश्यायां मागधः क्षत्रियायां क्षत्ता ब्राह्मण्यां चण्डालः ॥ ७ ॥ वैश्यात्क्षत्रियायामायोगवो ब्राह्मण्यां वैदेहकः ॥ ८ ॥ क्षत्रियाद्ब्राह्मण्यां सूतः ॥ ९ ॥ तत्राम्बष्ठोग्रसंयोगे भवत्यनुलोमः ॥ १० ॥ क्षत्तृवैदेहकयोः प्रतिलोमः ॥ ११ ॥ उग्राज्जातः क्षत्त्र्यां श्वपाकः ॥ १२ ॥ वैदेहकादम्बष्ठायां वैणः ॥ १३ ॥ निषादाच्छूद्रायां पुल्कसः ॥ १४ ॥ शूद्रान्नि-षाद्यां कुक्कुटः ॥ १५ ॥ वर्णसंकरादुत्पन्नान्व्रात्यानाहुर्मनीषिणो[४] व्रात्यानाहुर्म-नीषिण इति ॥ १६ ॥

इति प्रथमप्रश्ने नवमोऽध्यायः ॥ ९ ॥

(अथ प्रथमप्रश्ने दशमोऽध्यायः)।

षड्भागभृतो राजा रक्षेत्प्रजाम् ॥ १ ॥ ब्रह्म वै स्वं महिमानं ब्राह्मणेष्वदधाद-ध्ययनाध्यापनयजनयाजनदानप्रतिग्रहसंयुक्तं वेदानां गुप्त्यै ॥२॥ क्षत्रे बलमध्ययनय-जनदानशस्त्रकोशभूतरक्षणसंयुक्तं क्षत्रस्य वृद्ध्यै ॥ ३ ॥ विट्स्वध्ययनयजनदानकृ-षिवाणिज्यपशुपालनसंयुक्तं कर्मणां वृद्ध्यै ॥ ४ ॥ शूद्रेषु पूर्वेषां परिचर्या ॥ ५ ॥

---

१ ख. 'ग्रादाप'। २ ख. 'ज्जाता भवन्ति । तमु' । ३ ख. 'कृतो जीकमर इत्येषां । ४ ख. 'षिण इति ।

